# उपसर्गवृत्तिः



प्रप्रत्यपिपरापोपपर्यन्ववविसंस्वति ।
निर्न्युदधिदुरभ्याङ् उपसर्गाश्च विंशतिः ॥ १ ॥

इति विंशति उपसर्गाः । एषां वृत्तिसूत्रमभिधास्यामः ।

प्र । आदिकर्मोदीर्णभृशार्थैश्वर्यसंभववियोगनियोगतृप्तिशुद्धीच्छाशक्तिशांतिपूजाग्रदर्शनेषु प्रेत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

आदिकर्मणि प्रगतः प्रबलो राजा ।
उदीर्णे प्रबला मूषिका ।
भृशार्थे प्रवदन्ति दायादाः ।
ऐश्वर्ये प्रभुर्देवदत्तः ।
संभवे हिमवतो गंगा प्रभवति ।
वियोगे प्रेषितः।
नियोगे प्रयुक्तः ।
तृप्तौ प्रभुक्तं अन्नम् ।
शुद्धौ प्रसन्नमुदकम् ।
इच्छायां प्रार्थयते कन्याम् ।
शक्तौ प्रशक्तो विद्यायाम् ।
शांतौ प्रशांतोऽग्निः ।
पूजायां प्रांजलि स्थितः ।
अग्रे प्रवालो वृक्षस्य ।
दर्शने प्रलोकयति कन्याम् ।
इत्ययं प्रोपसर्गः ॥ १ ॥

परा । वधमर्षणगतिविक्रमाभिमुख्यभृशार्थाप्राधान्यविमोक्षप्रातिलोम्येषु । परा इत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

वधे पराघातः ।
मर्षणे परामृषू ।
गतौ परागतः ।
विक्रमे पराक्रान्तः ।
अभिमुख्ये परावृत्तः ।
भृशार्थे पराजितः ।
अप्रधाने पराधीनः ।
विमोक्षे पराक्षतः ।
प्रातिलोम्ये पराङ्मुखः ॥ २ ॥

अप । वर्जनवियोगचौर्यहर्षनिर्द्देशविकृतिवारणविपर्ययेषु । अयमपोपसर्ग एतेष्वर्थेषु वर्तते ।

वर्जने अपसांकाश्याद्दृष्टो देवः ।
वियोगे अपयाति ।
चौर्ये अपहरति ।
निर्द्देशे अपदिशति ।
विकृतौऽपकृतम् ।
वारण अपसरति ।
विपर्यये अपशब्दः ॥ ३ ॥

सम् । योगऐक्यप्रभ्वसत्यसमंततोभावविभूषणाभिमुख्यश्लेषसिद्धिक्रोधस्वीकरणेषु । समयं उपसर्ग एतेष्वर्थेषु वर्तते ।

योगे संगतः पुत्रेण ।

वियोगे संवियुक्तः प्रियेण ।
ऐक्ये संप्रवदन्ति मुख्याः |
प्रभवे संभवति अग्निः काष्ठैः ।
सत्य संवादः ।
समक्षे संकथा वर्तते ।
समंतताभावे संकीर्णः ।
भूषणे संस्कृता कन्या ।
अभिमुख्ये संमुखं वर्तते ।
श्लेषे संधते कार्यम्।
सिद्धौ संसिद्धिः ।
क्रोधे संकृद्धः ।
स्वीकरणे संगृह्णाति ॥ ४॥

अनु । पश्चाद्भावाधिष्ठानसामीप्यस्वाध्यायानुबंधविसर्गसादृश्याभिमुख्यलक्षणहीनेषु ।

इत्यनूपसर्ग एतेष्वर्थेषु वर्तते ।
पश्चाद्भावे अनुरथं पदातयः ।
अधिष्ठाने अनुष्ठानं पाटलिपुत्रम् ।
सामीप्ये अमुमेघं गगनम् ।
स्वाध्याये व्याकरणमनुवदति ।
अनुबंधे अनुशयः ।
विसर्गे अनुज्ञातो गच्छति ।
सादृश्ये अनुकृतिः ।
आभिमुख्ये अनुवत्सो मातरं धावति ।
लक्षणे अनुवनमसौ निर्गतः ।
हीने अन्वर्जनं योद्धारः ॥ ५ ॥

अव । विज्ञानावलंबने शुद्धीषदर्थव्याप्तिपरिभववियोगेषु अवेत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।
विज्ञाने अवगतोऽर्थः ।
अवलंबने अवष्टभ्य यष्टिं गच्छति ।
शुद्धौ अवदातं मुखम् ।
ईषदर्थे अवभुक्तम् ।
व्याप्तौ अवकीर्णं पांशुभिः ।

परिभवे अवहसति ।

वियोगे अवमुक्ता कान्ता ॥ ६ ॥

निर् । वियोगभृशार्थपापात्ययावधारणादेशातिक्रमलाभेषु निरित्युपसर्ग अयमेतेषु अर्थेषु वर्तते ।

वियोगे निःशल्यम् ।
भृशार्थे निर्नीतः ।
पापे निर्मर्यादः ।
अत्यये निर्दोधं गमनम् ।
अवधारणे निश्चितः ।
आदेशे निर्दिष्टः ।
अतिक्रमे निःक्रांतः ।
लाभे निर्विशेषः ॥ ७ ॥

दुर् । ईषदर्थकुत्सनवैवर्ण्यासंपत्यलाभेषु दुरित्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

ईषदर्थे दुर्गृहीतः ।
कुत्सने दुर्बलः ।
वैवर्ण्ये दुर्वर्णः ।
असंपत्तौ दुर्गतः ।
अलाभे दुःप्राप्यः ॥ ८ ॥

वि । नानार्थवियोगातिशयभयदूरार्थभृथार्थकलहैश्वर्यमोहपौशून्योत्कर्षकुत्सनेषदर्थानाभिमुख्यानवस्थानाप्राधान्यदर्शनशौर्येषु । वि इत्ययं उपसर्ग एतेष्वर्थेषु वर्तते ।

नानार्थे विचित्रा कृतिः पाणिनेः ।
वियोगे वियुक्तः ।
अतिशये विकीर्णः ।
भये विभीषणः ।
ईषदर्थे विप्रकृष्टमध्वानम् ।
भृशार्थे विसुद्धा नदी ।
कलहे विभज्य धनम् ।
ऐश्वर्ये विभुर्देवदत्तस्य ।
मोहे विमनस्कः ।
पैशून्ये विकरः ।
उत्कर्षे विस्मितो देवदत्तः ।
कुत्सने विरुपः ।
ईषदर्थे विलोपितः ।
अनाभिमुख्ये विमुखः ।
अनवस्थाने विभ्रांतः ।
अप्रधान्ये विनिष्टः ।
दर्शने विलोकनीया कन्या ।
शौर्ये विक्रांतः ॥ ९ ॥

आङ् । प्राप्तीच्छाबंधनभयवाक्यश्लेषाभिविधिसाध्यकृच्छ्रादिकर्मग्रहणनिलयसामीप्यविक्रियानिमंत्रणनिवृत्याशीरादानांतर्भावस्पर्धाभिमुख्योर्ध्वकर्मविस्मयप्रतिष्ठानिर्देशशक्तिमर्यादासु ।

आङ् इत्युपसर्ग एतेष्वर्थेषु वर्तते । तद्यथा ।
प्राप्तौ आसादितमनेन ।
इच्छायां आकांक्षति ।
बंधने आमुञ्चति कवचम् ।
भये आकंपितः ।
वाक्ये आज्ञापयति ।
अभिविधौ आकृमारं यश पाणिनेः ।
श्लेषे आलिंगयति ।
साध्ये आचरति कपटेन ।
कृच्छ्रे आपद्गतः ।
आदिकर्मणि आरभते कर्तुम् ।
ग्रहणे आलंबते ।
निलये आवसथम् ।
सामीप्ये आसन्नं कल्याणम् ।
विक्रियायां आस्वादयति ।
निमंत्रणे आमंत्रणम् ।
निवृत्तौ आरमते ।
आशिषि आशास्ते ।
आदाने रसायनम् ।
अंतर्भावे आपीतमुदकम् सिकताभिः ।
स्पर्धायां मल्लो मल्लमाह्वयति ।
आभिमुख्ये आगच्छति देवदत्तः ।
उर्ध्वकर्मणि आरोहति हस्तिपकः ।
विस्मये आनंदिताः ।
प्रतिष्ठायां आस्पदम् ।
निर्देशे आदिशति ।
शक्तौ आक्रमते गगनं चंद्रमाः ।
मर्यादायां आइलावर्धनात्संपन्नः शालयः ॥ १० ॥

नि । निवेशराशिभृशार्थाधोभावनिवासद्दारकर्मदर्शनोपरमबंधनकौशल्यांतर्भावसानीधमोक्षाश्रयेषु निरित्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

निवेशे निवेशितम् ।
राशौ निकरो धान्यस्य ।
भृशार्थे निगृहीतः ।
अधोभावे निपतितः ।
निवासे निवसितो नरम् ।
दारकर्मणि निविष्टो देवदत्तः ।
दर्शने निशामयति रुपम् ।
उपरमे निवृतः ।
बंधने नियमितः ।
कौशल्ये निपुणः ।
अंतर्भावे निपीतमुदकम् सिकताभिः ।
सामीप्ये निकृष्टकालः ।
मोक्षे निसृष्टः ।
आश्रये निलयः ॥ ११ ॥

अधि । वशीकरणाधिष्ठानाध्ययनैश्वर्यस्मरणाधिकेषु अधि इत्ययं उपसर्ग एतेष्वर्थेषु वर्तते ।

वशीकरणे अधिकरोति अर्थी ।
अधिष्ठाने अधिगुणः ।
अध्ययने अधीते व्याकरणम् ।
ऐश्वर्ये अधिपतिः ।
स्मरणे क्षेत्रमधिस्मरति ।
आधिक्ये अधिक्षेत्रे राज्ञः ॥ १२ ॥

अपि । संभावनानिवृत्तिअपेक्षासमुच्चयसंभवगर्हाशीरमर्षणप्रश्नेषु । अपीत्ययं उपसर्ग एतेष्वर्थेषु वर्तते ।

संभावने अपि सिंचेन्मूलसहस्रम् ।
निवृत्तौ मांसमपि जुह्यात् ।
अपेक्षायां अथायमपि विद्वान् ।
समुच्चये त्वहमपि अयमपि ।
संभवे अपि संभवति ।
(अहिः स्तुहिषु) गर्हायां अपि वृषलं याचयेत् ।
आशिषि अपि वर्षं शतं जीयाः ।
अमर्षणे अपि भजन्न नमेत् ।
भूषणे अपि नह्यति हारम् ।
प्रश्ने अपि गच्छति ॥ १३ ॥

अति । अतिशयभृशार्थातिक्रांतिअतिक्रमणवृद्धिषु । अति इत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

अतिशयो अतिमानुषं यस्य विज्ञानम् ।
भृशार्थे अतितप्ता आयः ।
अतिक्रान्तौ अतिरथिम् ।
अतिक्रमणे हस्तिनातिक्रमति ।
वृद्धौ अतिमेघं गगनम् ॥ १४ ॥

सु । पूजाभृशार्थानुमतिसमृद्धिप्रशंसाकृच्छ्रेषु । सु इति अयमुपसर्ग एतेष्वर्थेषु वर्तते ।

पूजायाम् सुसाधुः ।
भृशार्थे सुतप्ता आयः ।
अनुमतौ सुकृतम् ।
समृद्धौ सुमुद्रम् ।
प्रशंसायां सुकृषिम् ।

कृच्छ्रे सुदुःकरः ॥ १५ ॥

उत् । प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशास्वस्थमोक्षाभावबंधनप्राधान्यशक्तिषु । उत् इत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

प्राबल्ये उद्विलसत्सर्पः ।
वियोगे उत्पथेन गच्छति ।
उर्ध्वकर्मणि उत्तिष्ठति शयनात् ।
लाभे उत्पन्नं द्रव्यम् ।
प्रकाशे उच्चरन्ति नभसि मेघाः ।
अस्वस्थे उत्सुकः ।
मोक्षे उद्वासः ।
अभावे उत्पथः ।
बंधने उद्बद्धा कन्या ।
प्राधान्ये उत्कृष्टः ।
शक्तौ उत्साहः ॥ १६ ॥

अभि । पूजाआभिमुख्यभृशार्थसादृश्यप्रयोगव्याप्तिनृत्तसारुप्यवचनादानाम्नायेषु । अभि इति अयमुपसर्ग एतेषु अर्थेषु वर्तते ।

पूजायां अभिवादयति ।
आभिमुख्ये अभिमुखं स्थितः ।
भृशार्थे अभिरतः ।
सादृश्ये अभिज्ञातः ।
प्रयोगे अभिजानाति ।
इच्छायां अभिलषति ।
व्याप्तौ अभिस्यन्दः ।
नृत्ते अभिनयः ।
सारुप्ये अभिरुपः ।
वचने अभिवचनम् ।
आदानेऽभ्यवहरति ।
आम्नाये अभ्यस्यति ॥ १७ ॥

प्रति । सादृश्यादानहिंसातद्योगविनिमयप्रतिनिधिनिवृत्तिव्याध्याभिमुख्यव्याप्तिवारणेषु । प्रत्ययमुपसर्ग एतेष्वर्थेषु वर्तते ।

सादृश्ये प्रतिकृतं देवदत्तेन ।
आदाने प्रतिगृह्णाति ।
हिंसायां प्रतिहरति ।
तद्योगे प्रतिपन्नमनेन ।
विनिमयो तोलनघृतं प्रतिददाति ।
प्रतिनिधौ प्रतिच्छंदः ।
निवृत्तौ प्रतिक्रांतः ।
व्याधौ प्रतिश्यायः ।
अभिमुख्ये प्रतिसूर्ये गच्छति ।
व्याप्तौ प्रतिकीर्णं पांशुभिः ।
वारणे प्रतिनिवृत्तः ॥ १८ ॥

परि । समंततोभावव्याप्ति दोषाख्यानोपरभूषणपूजावर्जनालिंगननिवसनव्याधिशोकवीप्सासु ।
परीति अयमुपसर्ग एतेष्वर्थेषु वर्तते ।

समंततोभावे परिक्रमति ।
व्याप्तौ परिगतोऽग्निना ग्रामः ।
दोषाख्याने परिभ्रमति ।

उपरमे परिपूर्णः कुंभः ।
भूषणे परिष्करोति कन्याम् ।
पूजायां परिचर्या ।
वर्जने परित्रिगर्तेभ्यावृष्टो देवदेवः ।
आलिंगने परिष्वजते कन्याम् ।
निवसनो परिधानम् ।
व्याधौ परिगता स्फोटकाः ।
शोके परिदेवना ।
वीप्सायां वृक्षं वृक्षं परिसिंचति ॥ १९ ॥

उप । सामीप्यासामर्थ्यव्याप्त्याचार्यकरणदोषाख्यानदानदाक्षिण्यवीप्सारंभपूजातद्योगओरत्ययमरणेषु ।

उप इति उपसर्ग एतेष्वर्थेषु वर्तते ।
सामीप्ये उपकुंतम् ।
सामर्थ्ये उपकरोति देवदत्तः ।
व्याप्तौ उपकीर्णं पांशुभिः ।
आचार्यकरणे उपदिशति शिष्येभ्यः ।
दोषाख्याने उपघातः ।
दाने उपहरत्यर्थं देवदत्तायाः ।
दाक्षिण्ये उपचारः ।
वीप्सायां उपयाचते ।
आरंभे उपक्रमते भोक्तुम् ।
पूजायां उपासितः ।
तद्योगे उपपन्नं ध्यानमाह ।
प्रत्यये उपपन्नं धनम् ।
शरणे उपगतो देवदत्तः ।
प्रत्यये उपसर्गधर्मः ॥ २० ॥
इति उपसर्गवृत्तिः समाप्ता ॥